चतुर्थः पाठः

# कर्मगौरवम्

प्रस्तुत पाठ, श्रीमद्भगवद्गीता के द्वितीय एवम् तृतीय अध्यायों से संगृहीत है। श्रीमद्भगवद्गीता वह विश्वप्रसिद्ध ग्रन्थरत्न है, जिसमें श्रीकृष्ण ने विषादग्रस्त अर्जुन को कर्त्तव्य का उपदेश देकर धर्मरक्षार्थ युद्ध के लिए प्रेरित किया था। कर्मों में कुशलता को ही योग बताया गया है। अतः सभी को निःसंगभाव से सदा सर्वहित के कार्यों में संलग्न रहना चाहिए। यही उपनिषदों का भी सन्देश है–कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।



**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥1॥**

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥2॥**

न कर्मणामनारम्भान्नैष्कर्म्यम् पुरुषोऽश्नुते।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति ।।3।।

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।।4।।

तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ।।5।।

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ।।6।।

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।।7।।

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ।।8।।

## शब्दार्थाः टिप्पण्यश्च

**जहातीह** – जहाति + इह, हा धातु + लट् + प्रथम पुरुष एकवचन, यहाँ, (इस लोक में) त्याग देता है।

**सुकृतदुष्कृते** – सुकृतं च दुष्कृतं च, द्वन्द्व समास, पुण्य और पाप।

**युज्यस्व** – युज् धातु (आत्मनेपद) + लोट् + मध्यम पुरुष एकवचन, प्रयत्न करो।

**आस्थिताः** – आङ् + स्था धातु + क्त, प्रथम पुरुष बहुवचन, प्राप्त हुए थे।

**लोकसंग्रहमेवापि** – लोकसंग्रहम् + एव + अपि, लोकसंग्रह को भी।

**अर्हसि** – अर्ह् धातु + लट् + मध्यम पुरुष एकवचन, योग्य हो।

| | | |
|---|---|---|
| **आचरति** | – | आङ् + चर् धातु + लट् + प्रथम पुरुष एकवचन, आचरण करता है। |
| **इतरः** | – | अन्य लोग, सब लोग। |
| **अनुवर्तते** | – | अनु + वृत् धातु + लट् + प्रथम पुरुष एकवचन, अनुसरण करता है। |
| **न जनयेत्** | – | जन् धातु + णिच् + विधिलिङ् + प्रथम पुरुष एकवचन, उत्पन्न नहीं करना चाहिए। |
| **कर्मसङ्गिनाम्** | – | कर्म मे आसक्त मनुष्यों का। |
| **जोषयेत्** | – | जुष् धातु + णिच्, विधिलिङ् + प्रथम पुरुष एकवचन, करवाना चाहिए, लगना चाहिए। |
| **कुरु** | – | डुकृञ् + (परस्मैपद) लोट् + मध्यम पुरुष एकवचन, करो। |
| **ज्यायः** | – | प्रशस्य + ईयसुन्, नपुं + प्रथम विभक्ति एकवचन, श्रेष्ठ है। |
| **ह्यकर्मणः** | – | हि + अकर्मणः, क्योंकि कर्म न करने से। |
| **शरीरयात्रापि** | – | लौकिकव्यवहारः (शरीरयात्रा + अपि) शरीर–निर्वाह भी। |
| **प्रसिद्ध्येदकर्मणः** | – | प्रसिद्ध्येत् + अकर्मणः;कर्म न करने से सिद्ध नहीं होगा। |
| **कर्मणामनारम्भान्नैष्कर्म्यम्** | – | कर्मणाम् + अन् + आरम्भात् + नैष्कर्म्यम्, कर्मो का आरम्भ किये बिना निष्कर्मता को। |
| **अश्नुते** | – | अश् लट् प्रथम पुरुष एकवचन, प्राप्त करता है। |
| **समधिगच्छति** | – | सम् + अधि + गम् धातु + लट् + प्रथम पुरुष एकवचन, प्राप्त करता है। |
| **जातु** | – | (अव्यय), कभी। |
| **न तिष्ठत्यकर्मकृत्** | – | तिष्ठति + अकर्मकृत्, कर्म किये बिना नहीं रहता। |
| **समाचर** | – | सम् + आङ् + चर् धातु + लोट् मध्यम पुरुष एकवचन, भलीभाँति करो। |
| **असक्तः** | – | सञ्ज् धातु + क्त सक्तः न सक्तः असक्तः, नञ् तत्पुरुष समास, अनासक्त होकर। |
| **आचरन्** | – | आङ् + चर् + शतृ, प्रथमा एकवचन, करता हुआ। |
| **आप्नोति** | – | आप् धातु + लट् + प्रथम पुरुष एकवचन, प्राप्त करता है। |

# अभ्यासः

1. **संस्कृतभाषया उत्तरत-**

(क) अयं पाठः कस्मात् ग्रन्थात् सङ्कलितः?

(ख) अकर्मणः किं ज्यायः?

(ग) जनकादयः केन सिद्धिम् आस्थिताः?

(घ) लोकः कम् अनुवर्तते?

(ङ) बुद्धियुक्तः अस्मिन् संसारे के जहाति?

(च) केषाम् अनारम्भात् पुरुषः नैष्कर्म्यं प्राप्नोति?

2. **नियतं कुरु कर्म त्वं ..... प्रसिद्ध्येदकर्मणः अस्य श्लोकस्य आशयं हिन्दीभाषया स्पष्टीकुरुत।**

3. **'यद्यदाचरति ..... लोकस्तदनुवर्तते' अस्य श्लोकस्य अन्वयं लिखत।**

4. **अधोलिखितानां शब्दानां विलोमान् पाठात् चित्वा लिखत-**

**यथा- वशः - अवशः**

(क) बुद्धिहीनः - ..................

(ख) दुष्कृतम् - ..................

(ग) अकौशलम् - ..................

(घ) न्यूनः - ..................

(ङ) कर्मणः - ..................

(च) दुर्गुणैः - ..................

(छ) कदाचित् - ..................

(ज) निकृष्टः - ..................

5. **अधोलिखतेषु पदेषु सन्धिविच्छेदं कुरुत-**

जहातीह, ह्यकर्मणः, शरीरयात्रापि, पुरुषोऽश्नुते, तिष्ठत्यकर्मकृत्, प्रकृतिजैर्गुणैः, कर्मणैव, लोकस्तदनुवर्तते, जनयेद्ज्ञानाम्

**6. अधोलिखितक्रियापदानां लकारपुरुषवचननिर्देशं कुरुत-**

जहाति, युज्यस्व, कुरु, अश्नुते, समधिगच्छति, तिष्ठति, आप्नोति, अनुवर्तते, जनयेत्, जोषयेत्।

**7. अधोलिखतवाक्येषु रेखाङ्कितपदानां विभक्तीनां निर्देशं कुरुत-**

(क) योगः <u>कर्मसु</u> कौशलम्।

(ख) जीवने नियतं <u>कर्म</u> कुरु।

(ग) <u>कर्मणा</u> एव जनकादयः संसिद्धिम् आस्थिताः।

(घ) <u>अकर्मणः</u> कर्म ज्यायः।

(ङ) <u>कर्मणाम्</u> अनारम्भात् पुरुषः नैष्कर्म्यं न अश्नुते।

**8. प्रदत्तमञ्जूषायाः समुचितपदानां चयनं कृत्वा अधोदत्तशब्दानां प्रत्येकपदस्य त्रीणि समानार्थकपदानि लिखन्तु।**

अनारतम्, मनीषा, गात्रम्, दुष्कर्म, प्राज्ञः, कलुषम्, शेमुषी, अविरतम्, कोविदः, कायः, मतिः, पातकम्, देहः, मनीषी, अश्रान्तम्

| | | | |
|---|---|---|---|
| (क) विद्वान् | .................. | .................. | .................. |
| (ख) शरीरम् | .................. | .................. | .................. |
| (ग) बुद्धिः | .................. | .................. | .................. |
| (घ) सततम् | .................. | .................. | .................. |
| (ङ) दुष्कृतम् | .................. | .................. | .................. |

**9. कर्म आश्रित्य संस्कृतभाषायां पञ्च वाक्यानि लिखत-**

**10. पाठे प्रयुक्तस्य छन्दसः नाम लिखत-**

**11. जनः कीदृशैः गुणैः कार्यं करोति? अधोलिखितं श्लोकमाधृत्य लिखत-**

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥

## योग्यताविस्तारः

**अधोलिखितानां सूक्तीनामध्ययनं कृत्वा प्रस्तुतपाठेन भावसाम्यम् अवधत्त-**

**(1) गच्छन् पिपीलको याति योजनानां शतान्यपि।**
**अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति॥**

**(2) उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।**
**न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥**

*पञ्चतन्त्रम् / मित्रसम्प्राप्ति - 129*

**(3) कर्मणा जायते सर्वं, कर्मैव गतिसाधनम्।**
**तस्मात् सर्वप्रयत्नेन, साधु कर्म समाचरेत्॥**

*विष्णुपुराण - 1/18/32*

**(4) चरन्वै मधु विन्दति, चरन् स्वादुमुदम्बरम्।**
**सूर्यस्य पश्य श्रेमाणं, यो न तन्द्रयते चरन्॥**

*ऐतरेय ब्राह्मण - 33.3.5*

**(5) जलबिन्दुनिपातेन क्रमशः पूर्यते घटः।**
**स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च॥**

*चाणक्यनीति - 12/22*

**(6) दुष्कराण्यपि कार्याणि, सिध्यन्ति प्रोद्यमेन वै।**
**शिलापि तनुतां याति, प्रपातेनार्णसो मुहुः॥**

*बुद्धचरितम् - 26/63*

**(7) कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति, न कर्म लिप्यते नरे॥**

*यजुर्वेद - 40/2 7*

**अधोनिर्मिततालिकां दृष्ट्वा समस्तपदैः सह विग्रहान् मेलयत–**




**विग्रहाः**

(1) बुद्ध्या युक्तः (तृतीया तत्पुरुषः)

(2) न वशः (नञ् तत्पुरुषः समास)

(3) बुद्धेः भेदम् (षष्ठी तत्पुरुषः समास)

(4) सर्वाणि कर्माणि (कर्मधारय समास)

(5) कर्मणि रतः (सप्तमी तत्पुरुष समास)

(6) (अ) न कर्मणः (नञ् तत्पुरुष)

(ब) न आरम्भात् (नञ् तत्पुरुष)

(7) कर्मफलस्य हेतुः (षष्ठी तत्पुरुष समास)

(8) शरीरस्य यात्रा (षष्ठी तत्पुरुष समास)

(9) लोकाय संग्रहम् (चतुर्थी तत्पुरुष समास)

(10) (अ) न सक्तः (नञ् तत्पुरुष)

(ब) न ज्ञानानाम् (नञ् तत्पुरुष)

(11) न चरन् (नञ् तत्पुरुष)

(12) कर्मसु सङ्गिनाम् (सप्तमी तत्पुरुष)

(13) सुकृतम् दृष्कृतम् च (द्वन्द्व समास)

**अधोलिखितादर्शवाक्यानि सम्बद्धसंस्थाभिः योजयत-**

| **आदर्शवाक्यम्** | **संस्था** |
|---|---|
| (क) सत्यमेव जयते | राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद् |
| (ख) विद्ययाऽमृतमश्नुते | भारतसर्वकारः |
| (ग) असतो मा सद्गमय | कतिपयविद्यालयेषु |
| (घ) सा विद्या या विमुक्तये | केन्द्रीयमाध्यामिक शिक्षा परिषद् |
| (ङ) योगः कर्मसु कौशलम् | राष्ट्रीय अध्यापक शिक्षा परिषद् |
| (च) गुरुः गुरुतमो धामः | भारतीय प्रशासनिक सेवा अकादमी, मसूरी |
| (छ) तत्वं पूषन्नपावृणु | डाकतारविभागः |
| (ज) अहर्निशं सेवामहे | केन्द्रीय विद्यालय संगठन |
| (झ) श्रम एव जयते | भारतस्य सर्वोच्च न्यायालयः |
| (ञ) यतो धर्मस्ततो जयः | श्रममंत्रालयः |

## श्रीमद्भगवद्गीता

श्रीमद्भगवद्गीता महाभारतस्य भीष्मपर्वणि विद्यते। अत्र सप्तशतश्लोकाः अष्टादशाध्यायेषु उपनिबद्धाः सन्ति। युद्धभूमौ विषादग्रस्तार्जुनाय निष्कामकर्मणः उपदेशं प्रयच्छता भगवता श्रीकृष्णेन अत्र ज्ञान-भक्ति-कर्मणां समन्वयः प्रस्तुतः।

पूर्ववर्तिनो अनेके मनीषिणः जीवने उदात्तगुणानां विकासार्थं गीताशास्त्रेण प्रेरणां प्राप्तवन्तः। तेषु विद्वत्सु लोकमान्यतिलकः, महर्षि अरविन्दः, महात्मागान्धी, विनोबाभावे इत्यादयः प्रमुखाः सन्ति। एतैः विद्वद्भिः गीताशास्त्रस्य स्वभावाभिव्यक्तिस्वरूपाः व्याख्याः विलिखिताः। गीताशास्त्रस्य ज्ञान-भक्ति-कर्मयोगान् स्वजीवने अवतारयन्तः उन्नतादर्शान् उदात्तजीवनमूल्यान् एते मनीषिणः चरितार्थयन्ति स्म।

श्रीमद्भगवद्गीतायाः केचन अन्येऽपि श्लोका उद्धरणीयाः। तद्यथा-

**अनाश्रित्य कर्मफलं कार्यं कर्म करोतिः यः।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥6.1**

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥2.38**

**यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः**
**समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥4.22**

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥6.29**

अनेकैः कविभिः गीतायाः महत्त्वं प्रतिपादितम्। तन्महत्त्वं यत्र-तत्र अध्येतव्यम्। उदाहरणार्थम्-

**मलनिर्मोचनं पुंसां जलस्नानं दिने दिने।**
**सकृद्गीताम्भसि स्नानं संसारमलनाशनम्॥**

**अधोलिखितानां पदानामाशयोऽन्वेष्टव्यः-**

लोकसंग्रहम्, नैष्कर्म्यम्, प्रकृतिजः, सन्न्यसनम्